# गोप-हम्पण:”



By
Dr. V. RAGHAVAN

अमृतवाण्याम्
मुद्राप्य प्रकाशित:
१९४७.

## GOPA HAMPANNA

Hampanna, the hero of the following brief ballad in Sanskrit, died a martyr's death while defending the honour of a Hindu lady against a party of drunken British soldiers.

The inspiration for these verses was an account of the incident by the late Dewan Bahadur P. Kesava Pillai in his article "The Last Fifty Years" in the Golden Jubilee issue of the *Hindu*, Madras, dated 7th October 1928 (P. 18).

Six soldiers belonging to a British battalion camping at Guntakal *en route* to Secunderabad from Wellington, chased, in the evening stroll after their beer, a young Lingayat lady walking home in the company of an elderly Kuruba woman. The two fleeing ladies were afforded shelter by Hampanna, a Kuruba watchman stationed at the nearby Railway level-crossing. The soldiers attempted to break open his hut, but when he brandished a bamboo, they took to their heels; one of them turned, and shot at Hampanna with his revolver. The case was taken up, but dying Hampanna could indicate nothing at the identification parade. Public feeling was roused, the culprit was traced with the help of the bullet extracted from Hampanna's body and the case finally came up before Chief Justice Collins of the Madras High Court, with Norton and Wedderburn appearing for prosecution and defence. There was great commotion in the City and the Court, and the crowds were roughly handled by the police. The defence case that the young lady was a prostitute, that Hampanna her procurer grew violent while higgling about her fees and that the soldier shot in self-defence, was up held by the Court.

The European community and the Madras Mail applauded the verdict; but indignant national public opinion voiced itself forth through the Hindu; led by workers like Mr. Kesava Pillai, a move was started and in the teeth of jeerings and obstructions from Europeans and officials, which went to the extent of attempting to prosecute the local Hindu correspondent, a memorial was raised at Gooty for the heroic Hampanna. With an English inscription, the memorial stands there even to-day, inviting the homage of every patriotic way-farer on the Kurnool-Bangalore road.

**V. Raghavan**

# "गोप-हम्पयणः"

डाक्टर् वे. राघवः

(१)

आकल्यसञ्चारनितान्तसीदत्-
पदस्समासेवितवारुणीकः ।
आङ्ग्लो यथा रुष्टकपिश्च, तद्वद्
आपटलं वक्त्रमुवाह सूर्यः ॥१॥

स्वयं तपांशुर्दिवसोऽप्यमेघो
महीमरोधं तपनस्तताप ।
आवृत्य सौम्यस्तु जरद्दिनान्तः
तापद्रुतां तां जगतीं जुगोप ॥२॥

*1 सिकन्दराबादभिगत्वरः कोऽ-
प्याङ्ग्लयसैन्यस्य विभाग एकः ।
*2 गुण्डकलाख्यं निकषा प्रदेशं
बबन्ध विश्रामपटीकुटीरान् ॥३॥

महाध्वसन्नेषु वपुष्षु सत्त्व-
मुद्रेकयद्भ्यस्सुरया भटेभ्यः ।
उच्चावचोत्थः पटगेहमध्यात्
कोलाहलस्तत्र दिशो जगाहे ॥४॥

दिनोरुतापे चणपक्वभक्ष्यं 3*
विक्रीय वृत्तेस्समुपार्ज्य किञ्चित् ।

---

*1. Secunderabad.

*2. Guntakal.

*3. Sundal as it is called in Tamil ; boiled gram.

केदारसीमन्तपथेन मन्दं
चचार गेहं प्रति कापि वृद्धा ॥५॥

स्वधान्यवाटीपरिपालनेन
मध्याह्नवेलामतिवाह्य काचित् ।
कुलाङ्गना यौवनपोषकम्रा
तां सङ्गमामापि तदा गृहोत्का ॥६॥

आवर्जितात्यायतभानुभानु-
स्वर्णाभशृङ्गाङ्घ्रिपवद्धमार्गे ।
तयोर्व्रजन्त्योर्मदघूर्णमान-
हासप्रलापध्वनिरुद्भभूव ॥७॥

श्रुत्वा तमाभुग्नगलेन यावद्
द्रष्टुं प्रवृत्ते जरतीतरुण्यौ ।
तावत्तरुण्यां सरभोहमेत्य
श्वेता[1]*भटा उत्ससृपुर्जवेन ॥८॥

शून्यीभवद्वीक्षणमुचकम्पे
परस्परं वीक्ष्य ततो जवेन ।
निरूप्य पद् स्वं प्रति आव्रतस्तान्
स्त्रीयुग्ममेतच्च विधावति स्म ॥९॥

अदूरतस्तत्र च बाष्पयान-
रेखापुराध्वप्रतिमेलभूम्याम् । 2*
द्वाराभिरक्षार्थकृताधिवासो
हम्पणनामा पशुपो बभूव ॥१०॥

---

*1. Sveta, Sita, Dhavala etc.—British.

2. At the level-crossing of the railway and the road.

समाकुलाधावदवेक्ष्य युग्मं
स्त्रियोः, तदालोक्य पुरश्च मार्गे ।
अन्वाद्रवच्छ्वेतभटान्, स सद्यो
गोपस्सुमेधाः स्थितिमभ्यगच्छत् ॥११॥

स ते स्त्रियौ तत्र निविष्टनैज-
कुटीरगर्भे विनिगूह्य गाढम् ।
कवाटमाघट्ट्य तदन्तिके च
बबन्ध नैजां स्थितिमप्रकंप्याम् ॥१२॥

अतीव वेगादनुधाव्य ते च
श्वेता वृका नैव विलोक्य वामाम् ।
सिंहोरुसत्त्वं तु कुटीकवाट-
प्रान्तस्थितं गोपमलोकयन्त ॥१३॥

तमन्तरुज्जृंभितमानवह्नि-
ज्वालं तथाप्याश्रितधीरमौनम् ।
अपाङ्गयन्तस्समहावमानं
कवाटमेवांघ्रितलैर्निजघ्नुः ॥१४॥

हम्पण्णगोपो भ्रुकुटीं निबध्नन्
तान् श्वापदान् श्वेतभटान् करेण ।
भूयो निवार्याभिनिनाय; ते तु
कवाटमुद्घाटयितुं प्रवृत्ताः ॥१५॥

यदा चिरायापि न दौष्ट्यतस्ते
साम्नोऽतिदूरा व्यरमन् सुरान्धाः ।
तदा स जग्राह समीपवल्ली-
विष्टम्भवेणुं पशुपः करेण ॥१६॥

तमुद्धतास्यं अभितोऽग्रनेणुं
हम्पण्णमालोक्य विवर्णवक्त्राः ।
ते श्वेतयोधाः शरणीकृतांघ्रि
संघर्षमन्योन्यमवापुरंहो ॥१७॥

तेषु द्रवत्सु प्रतिवीक्ष्य कश्चित्
चकार हस्ते नलिकां तनुं [*1] स्वाम् ।
अथास विस्फोटनिनाद एकः
पपात हम्पण्णवपुश्च भूम्याम् ॥१८॥

(२)

दुःखवत्परितो ध्वान्ते सृमरे, मिलिते जने ।
शेते स्म तत्र हम्पण्णो वीरलक्ष्म्यंकलालितः ॥१९॥

कुक्कुरा इव ते योधाः क्षणादेव पलायिताः ।
स्वोद्देशं च ततो जग्मुः विस्रब्धमकृताघवत् ॥२०॥

प्रत्यभिज्ञाक्रियायां [*2] तु यतस्स्वस्योपघातकम् ।
गत्वरासुस्स हम्पण्णः शेके सूचयितुं च नो ॥२१॥

ततस्तु बाष्पपूरेण तस्मै दत्त्वोदकं जनाः ।
हम्पण्णाय विषादाग्नौ अकुर्वन् संस्क्रियाविधिम् ॥२२॥

(३)

कालः कियानपि जगाम, जनोऽखिलस्तद्
हम्पण्णवीर्यमभिनन्द्य तदीयहत्या ।
क्रोधं महान्तमवहत् सितघातकेभ्यो
न्यायाङ्गणाय [*3] यतते स्म च नेतुमेतान् ॥२३॥

---

*1. Revolver.

*2. Identification parade.

*3. Court of Justice.

हम्पण्णतद्व्रणसमुद्धृतदाहगोल-[1]
मादाय घातकमनेन च मार्गयित्वा ।
मद्रे[2]महाजन उदग्ररुषानिनाय
न्यायाधिपस्य पुरतः प्रतिदण्डहेतोः ॥२४॥

सम्राट्पदस्थधवला अमिलंश्च तत्र
[3]देश्याननेष्ववमतिं नयनैः किरन्तः ।
पादावमर्दितफणिप्रभमानवौघो
निःश्वासिवक्त्रमभितोऽपि महान् समागात् ॥२५॥

"सा बन्धकी, तदुपकारिविटस्स गोपः,
तद्भोगमूल्यविषये स विवादकारी ।
वंशेन नः प्रहरणाय समाद्रवत, तद्
[4]आत्माभिरक्षणकृते स मया हतोऽभूत्" ॥२६॥

इत्यभ्युपेत्य निजमारककर्म हेतुं
श्वेते भटे वदति निस्सहृदेहबन्धाः ।
सर्वे जनास्स्तिमितविस्मितकोपमापुः,
अन्ये सितास्तु भटवाक्यमनूचुरंहो ॥२७॥

क्षारं क्षतेष्विति कृतं स तु वीक्ष्य नालं
सूच्या लिखन्निव ततो बत धर्मदेष्टा ।[5]
आहूय तां सुतनुमग्रत आत्मवाचा
वेश्यासि किं त्वमिति मर्म बिभेद पृच्छन् ॥२८॥

"सा बन्धकी, स च हतो निजरक्षणार्थम्"
इत्यच्छलं हि निरणाय्यृतपेन[6]तेन ।

---

*1. Bullet. *2. Madras. *3. Natives, Indians.
*4. Self-defence. *5&6. Judge; Mr. Collins.

“नान्तोऽस्ति दासजनतावमतेः, महेशाद्
दण्डो ध्रुवोऽस्य” जनतेति वदन्त्यपागात् ॥२९॥

(४)

अयि सहृदय कर्णूल्-बङ्गलूर्-[3]मार्गमध्ये
कुरु तव वर घूटी[*4]क्षेत्रयात्रामवश्यम् ।
विलसति महनीयस्तत्र चैत्यस्तु कश्चित्
तव नतिनुतिपूजा भूरि भूयात्तुरस्मै ॥३०॥

दृढमुपहमतां वा तत्प्रतिष्ठोरुविघ्नं
बहु विहितवतामेवाङ्ग्लानां प्रभूणाम् ।
ते हि परिभवपात्रैः शोकसन्नैरशक्तैः
समरचि निजमानस्तंभरूपोऽस्मदीयैः ॥३१॥

भो भो भावुकपान्थ ! तस्य पुरतः
ते बाष्पपाद्यं कुरु
श्लोकं तस्य शिलामुखे विलिखितं
त्वं वाचयित्वाप्यमुम् ।
“अत्र श्वेतभटाभियोगविपदः
काञ्चित्तु हिन्दुस्त्रियं
हम्पण्णः परिरक्ष्य तैरभिहतः,
तद् भस्म शेते महत् ॥३२॥

---

*3. Kurnool—Bangalore Road.

*4. Gooty.